# रायप्पसेणी ।

॥ ॐनमः ॥ श्रीवीतरागाय । नमो अरिहंताणं नमो सिद्धाणं नमो आयरियाणं नमो उवज्झायाणं नमो लोए सव्वसाहूणं ।

---

श्री नमो वीतरागाय । प्रणमत वीरजिनेश्वर चरणयुगं परमपाटलच्छायम् । अधरीकृतनतवासव मुकुटस्थितरत्नरुचिचक्रम् ॥ राजप्रश्नीयमहं विवृणोमि यथागमं गुरुनियोगात् । तत्र च शक्तिमशक्तिं गुरवो जानन्ति का चिन्ता । अथ कस्मादिदमुपाङ्गं राजप्रश्नीयाभिधानमिति । उच्यते । इह प्रदेशी नामा राजा भगवतः केशिकुमारश्रमणस्य समीपे यान् जीवविषयान् प्रश्नानकार्षीत्, यानि च तस्मै केशिकुमारश्रमणगणभृत् व्याकरणानि व्याकृतवान् यच्च व्याकरणसम्यक्परिणतिभावतो बोधिमासाद्य प्रदेशी राजा शुभानुबन्धयोगतः । प्रथमे सौधर्मनाम्नि नाकलोके विमानमधिपत्येनाध्यतिष्ठत् । यथा च विमानाधिपत्यप्राप्त्यनन्तरं सम्यगवधिज्ञानाभोगतः श्रीमद्वर्द्धमानस्वामिनं भगवन्तमालोक्य भक्तातिशयपरीतचेता सर्वस्वसामग्रीसमेतः इहावतीर्य भगवतः पुरतो द्वात्रिंशद्विधं नाट्यमुपदर्शितवान् नर्तितवान्, यथा शुक्लं दिविमुखमनुभूय ततश्च्युत्वा यथा समागत्य यथा सुक्तिपदमवाप्स्यति, तदेतत्सर्वमस्मिन्नुपाङ्गेऽभिधेयं प्र सकलं वक्ष्यते ततः । राजप्रश्नाद्भवति राजप्रश्नेषु भवं राजप्रश्नीयं, अथ कस्याङ्गस्येदमुपाङ्गं उच्यते सूत्रकृताङ्गस्य कथं तदुपाङ्गमिति चेत् । सूत्रकृताङ्गे अशीत्यधिकं शतं क्रियावादिनां सप्ततिरज्ञानिकानां द्वात्रिंशद् वैनयिकानां सर्वसंख्यया त्रीणि त्रिषष्ट्यधिकानि पाषण्डिकशतानि प्रतिक्षिप्य स्वसमयः स्थाप्यते । उक्तं च । "असियसयं किरियाणं अकिरियवाईण होइ चुलसीई । अन्नाणिय सत्तट्ठी वेणइयाणं च बत्तीसा । तिण्हं तेसट्ठाणं पासंडियसयाण वूहं किच्चा ससमयो ठाविज्जइ त्ति ।" प्रदेशी च राजा पूर्वमक्रियावादिमतभावितमना आसीत् अक्रियावादिमतमेवावलम्ब्य जीवविषयान् प्रश्नान् कृतवान्, केशिकुमारश्रमणश्च सूत्रकृताङ्गसूचितमक्रियावादिमतप्रतिक्षेपमुपजीव्य व्याकरणानि व्याकार्षीत् । ततो यान्येव सूत्रकृताङ्गसूचितानि केशिकुमारश्रमणेन व्याकरणानि व्याकृतानि तान्येवात्र सविस्तरमुक्तानीति सूत्रकृताङ्गगतविषयप्रकटनादिदमुपाङ्गं सूत्रकृताङ्गस्येति । एतच्च वक्ष्यमाणं भगवता वर्द्धमानस्वामिना गौतमाय साक्षाच्छिष्टं तत्र यस्यां नगर्यां येन प्रक्रमेणाख्यायि तदेतत्सर्वमभिधित्सुरिदमाह ।

---

हे श्रद्धावन्त पाठकगण श्री राजप्रश्नीय सूत्र का धार्मिक विस्तार है । राजप्रश्नीय सूत्र में कविवर प्रदेशी नामक राजा ने केशीकुमार श्रमण के पास जीव का स्वरूप पूछा इन प्रश्नोत्तरों से प्रदेशी राजा ने सम्यक्त्व प्राप्त किया धर्म पाया सो आगे —

क

भ० शर० ६

तेणं कालेणं तेणं समयेणं । आमलकप्पाणामं णयरी होत्था रिद्धित्थिमियस मिद्धा जावपासादीया दरिसणीया अभिरूवा पडिरूवा, तीसेणं आमल-

"तेणं कालेणं" तेनमित्यादि, ते इति प्राकृतशैलीवशात्तस्मिन्निति द्रष्टव्यं । अस्यायमर्थो यस्मिन् काले भगवान् वर्द्धमानस्वामीस्वयं विहरतिस्म तस्मिन्निति णमितिवाक्यालंकारे दृष्टश्चान्यत्रापिणं शब्दोवाक्यालंकारार्थो यथाइमाए पुढवीएत्यादीविति । कालेअधिकृतावसर्प्पिणी चतुर्थविभागरूपे अत्रापिणं शब्दोवाक्यालंकृतौ "तेणं समयेणन्ति" समयोऽवसरवाची तथाच लौकिकवारोनास्त्यापि तस्य वक्तव्यस्य समयोवर्त्तते किमुक्तं भवति । नाथाप्येतस्य वक्तव्यस्याऽवसरोवर्त्तते इति तस्मिन्नितियस्मिन् समयेभगवान् सूर्याभदेववक्तव्यतामवकथत् तस्मिन् "समये आमलकल्पानामनगरी" अभवत् । तत्किदानीमपिसानगरीवर्त्तते । तत कथमुक्तमभवदिति उच्यते वक्ष्यमाणवर्णकगुणोक्त विभूतिसमन्विता तदेवाभवत् नतुविवक्षितोपांगविधानकाले एतदपिकथमवसयमितिचेत उच्यते । अथकालो अवसर्पिणी अवसर्प्पिण्यश्च प्रतिक्षणं च शुभाभावाहानिमुपगच्छन्ति । एतच्चसुप्रतीत जिनप्रवचनवेदनामतोऽभवदित्युच्यमानं नविरोधभाक् सम्प्रत्यस्यानगर्य्यावर्णकमाह (रिद्धित्थिमियस मिद्धा जावपासादीयादरिसणीया अभिरूवापडिरूवा इति) ऋद्धाभवनैः पौरजनैश्चातीववृद्धिमुपागता ऋद्धवृद्धाविति वचनात् स्तिमिता स्वचक्रपरचक्रतस्करडमरादिसमुत्थभयकल्लोलमालाविवर्जिता, समृद्धा धनधान्यादिविभूतियुक्ता तत पदत्रयस्यापिविशेषणसमासः । यावच्छब्देन 'पमुइयजनजानवया" प्रमुदिता प्रमोदवन्त प्रमोदहेतुवस्तूना तत्सद्भावात् जनानगरीवास्तव्यालोका जानपदा जनपदभवास्तत्प्रयोजनवशागयाता सन्तो यत्र सा प्रमुदितजनजानपदा, "आइण्णजण मणुसा" मनुष्यजनैराकीर्णा प्राकृतत्वात्पदव्यत्ययः । "हलसयसहस्ससंकट्ठविगट्ठलट्ठपण्णत्तसेतुसीमा"। हलानांशतै सहस्रैश्चसकृष्टाविलिखिताविकृष्टानगया दूरवर्त्तीतिवर्षैर्विलेखितिभाव, लष्टामनोज्ञा प्राज्ञैश्चेकेराप्ताप्रज्ञाप्ताश्चेकेपुनपरिकल्पितेतिभाव, सेतुसीमाकुल्याजलसेव्यचेत्रसीमा यस्या सा हलशतसहस्रसंकृष्टविकृष्टलष्टप्राज्ञाप्तसेतुसीमा । "कुक्कुडसंडेयगामपउरा" कुक्कुटसपात्या ग्रामाः सन्त्यासुदिक्षुविदिक्षुच प्रचुरायस्यां सा कुक्कुटसंडेयग्रामप्रचुरा गोमहिषगावलगव्यभूया गावो बलीवर्द्दा महिषाप्रतीता गाव योगव्यएडकाउरभ्रास्तैप्रभूतायस्या सा तथा । "आयारवन्तचेइयजुवइविविहसन्निविट्ठबहुला" आकारवन्तिसुन्दराकाराणिचैत्यानियुवतीनाञ्च पण्यतरुणीनामिति

सूरियाभमएणइ उपनो भगवत आगलिया वीनाटिकदेवास्यु एहवीसकलवक्तव्यतानइ एहनेविषइ तणिकारणिगजप्रश्नीकहियइ । नमस्कारथाउ अरिहन्तणी नमस्कारथाउसिद्ध प्रतिनमस्कारथाउ आचार्यभणी नमस्कारथाउ उपाध्यायभणी नमस्कारथाउ लोक अढीद्वीपरूपनेविषइमाहि सर्वसाधू भणीएह मंगलीकभणीयाचपददेपाड्या तेणाइ कालइ अवसर्पणीकालनइ चउथइ आरइ तेणाइ समइ अवसरवाचार्जेणाइ समइसूर्याभदेवइ भगवत आगलीनाटकदेषाभइ आमलकप्पानामनगरी

भाव, विशिष्टानि सन्निविष्टान्निर्माणवेशपाटका इतिभाव, बहुलानिबहूनियस्यां सा तथा। "उक्कोडियगायगंठिभेदतक्करखंडरक्खरहिया।" उत्कोटालञ्चा तया चरन्ति उत्कोटिकास्तैर्गात्रभिदे शरीरविनाशकारिभिर्ग्रन्थिभेदैर्ग्रन्थिच्छेदै तस्करै खण्डरक्षैर्दण्डपाशिकैर्रहिता। अनेनतदीयोपद्रव कारिणामभावमाह। खेमा अशिवाभावात्। "निरुवद्दवा" राजादिकृतोपद्रवाभावात्। सुभिक्खा भिक्ष काणामभिक्षाचाणां सुलभत्वात्। "वीसत्थसुहावासा" विश्वस्तोनिर्भय सुखआवासोलोकानांयस्यां सा तथा, "अणेगकोडीकोडुम्बियाइण्णणिव्वुयसुहा" अनेककोटीभिरनेककोटीसङ्ख्यकै कौटुम्बिकैराकीर्णा निर्वृत्ता सन्तुष्टजनयोगात्शुभा भव्यवस्तूपेतत्वात् तत पदत्रयकर्मधारय। "नडनट्टगजल्लमल्लमुट्ठियवेलम्बगकहगपवगलासग आइक्खगलंखमङ्खतूणइल्लतुम्बवीणियअणेगतालायराणुचरिया"। नट नाटकाना नाटयितारो नर्तकायेनृत्यन्ति, जल्लाराज्ञ स्तोत्रपाठका मल्ला प्रतीतामौष्टिकामल्ला एवयेमुष्टिभि प्रहरन्ति, विडम्बकाविदूषका कथका प्रतीता प्लवकायेउत्प्लवन्तेनद्यादिकं वा तरन्ति, लासकायेरासकान गायन्ति ज्यशब्दप्रयोक्तारोवेंभण्डाइत्यर्थ, आख्यायिका येशुभाशुभमाख्यान्ति लखा महावंशाग्रखेलका मंखाश्चित्रफलकहस्ताभिक्षाका। "तूणइल्ला।" तूणाभिधानवाद्यविशेषवन्त। "तुम्बवीणिका" तुम्बवीणवादका, अनेकश्चयेतालाचरास्तालादानेनप्रेक्षाकारिण एते सर्वैरनुचरिता आसेविता या सा तथा। "आरामुज्जाणअगडतलागदीहियवप्पिणगुणोववेया" आरामा यत्रमाधवीलतागृहादिषु दम्पत्यशतादिन्यारमन्ते उद्यानानिपुष्पादिमद्वृक्षसङ्कुलान्युत्सवादौ बहुजनभोग्यानि। "अगडत्ति अवटा कूपा" स्तडागानिप्रतीतानि दीर्घिकासारिण्य वप्पिणकेदारा एतेर्गुणोपपेता रम्यतादिगुणोपपेता यस्या सा तथा। "उव्विद्धविउलगम्भीरखातफलिहा" उविद्ध उ ड विपुलविस्तीर्ण गम्भीरमलब्धमध्य खातमुपरिविस्तीर्णमध सङ्कुचित परि खाच अधउपरिसमखातरूपा यस्यासातथा। "चक्कगयमुसुंढिओरोहसयग्घिजमलकवाडघणदुप्पवेसा" चक्राणिप्रहरणविशेषरूपाणि गदाप्रहरणविशेषा मुषण्ढयोऽप्येव रूपाअवरोध प्रतोलीद्वारेऽभ्यन्त प्राकारसाभाव्यते शताघ्नीमहायष्टयोमहाशिलावाया पातिता शतानिपुरुषाणाघ्नन्ति यमलानिसमस्थितद्वयरूपाणि यानि कपाटानि घनानिनिश्छिद्राणि तैर्दुष्प्रवेशा या सा तथा। "धणुकुडिलवंकपागारपरिक्खित्ता।" धनु कुटिल कुटिलधनुस्ततोऽपिवक्रो य प्राकारस्तेनपरिक्षिप्ता या सा तथा। "कविसीसयवट्टरइयसंठियविरायमाणा।" कपिशीर्षकैर्वर्त्तितसंस्थितैश्च तुलकृतसंस्थानैर्विराजमाना शोभमाना सा तथा। "अट्टालयचरियदारगोपुरतोरणउन्नयसुविभत्तरायमग्गा।" अट्टालिका प्राकारोपरिभृत्याश्रयविशेषा चरिका अष्टहस्तप्रमाणोमार्ग, द्वाराणिभवनद्वादीना गोपुराणिप्राकारद्वाराणि तोरणानिच उन्नतानि उच्चानियस्या सा तथा, सुविभक्ताविविक्ताराजमार्गायस्या सा तथा, तत पदद्वयस्य कर्मधारय। "छेयायरियरइयदढफलिहइन्दकीला।" छेकेन निपुणेनाचार्येण शिल्पपाध्यायेनरचिता

---

पूर्वोक्तौ भगवतादिक कडिमसहितमठ सूत्रअपरचक्रभयरहित धनधान्यमिश्रित यावत शब्दड

कप्पाए णयरीए वहिया उत्तरपुरत्थिमेदिसीभाए, अम्बसाल वणे णाम चेइए होत्था पोराणे, जावपडिरूवे असोयवरपायावे पुढविसिला वट्टए वत्तव्वया

दृढोबलवान् परिघोऽर्गलाइन्द्रकीलश्च रूपाटितकपाटद्वयाधारभूत प्रवेशमध्यभागो यस्या सा तथा। "विवणिवणिच्छेत्तसिप्पियाइन्नतिव्वुइसुहा"। विपणीनांवणिक्पथानाहट्टमार्गाणां वणिजाचयैव स्थान सविपणिवणिक्क्षेत्र, तथा शिल्पिभि कुम्भकारादिभिर्निर्वृत्ते सुखिभि शुभैस्त्रावककर्म-कुशलैराकीर्णामक्रुष्टा त्वाच्चसत्वे अन्यथा पदोएन्यास तत पूर्वपदेन कर्म्मधारय। "सिघाडगतियचउक्कचच्चरपणियापणविविधवत्थुपरिमंडिया"। शृ घाटकत्रिकचतुष्कचत्वरै पणितानि क्रयाणि तत्प्रधानेषु आपणेषु यातिविविधानि वस्तूनि द्रव्याणितैश्च परिमण्डिता शृ घाटक त्रिकोणस्थानत्रिक यत्र रथ्यात्रयमिलति, चतुष्करथ्याचतुष्टयमीलनात्मक चत्वर बहुरथ्यापातस्थान सुरम्या अतिरम्या। "नरवइपविइण्णमहिवइपहा"। नरपतिना राज्ञा प्रविकीर्णागमनागमनाभ्या व्याप्तो महीपतिपथोराजमार्गा यस्या सा तथा। "अणेगवरतुरगमत्तकुंजरमहकरसीयसंदमाणी आइण्णजाणजुग्गा" अनेकैवरतुरगाणा मत्तकु जराणा रथाना च सहकारै सघातैस्तथा शिविकाभि स्यन्दमानोभियानियुग्यैश्चाकीर्णा व्याप्ता सा तथा। आकीर्णशब्दस्य मध्यनिपात प्राकृतत्वात् तत्र शिविका। कूटाकारेणाच्छादिता जपानविशेषाः स्य दमानिका पुरुषप्रमाणजपानविशेषा यानानि शकटादीनि युग्यानि गोल्लविषयप्रसिद्धानि द्विहस्तप्रमाणानि वेदिकोपशोभितानि जपानान्येव। "विमलउनवनलिनशोभियजला" विमुकुलैर्विकसितैनवैर्नलिनै कमलै शोभितानि जलानि यस्या सा तथा। "पडरभवणपत्तिमहियाउत्ताणयनयणपिच्छणिज्जाइतिसुगमापासाइया इत्यादि"। प्रासादेषु भवा प्रासादबहुलाइत्यथ, अतएव दर्शनीया द्रष्टु योग्या प्रसादा-नामति रमणीयत्वात्। तथा अभिद्रष्टन् प्रतिप्रत्येकमभिमुखमतीवचेतोहारित्वात्। रूपमाकारो यस्या सा अभिरूपा। एतदेवव्याचष्टे प्रतिरूपा प्रतिविशिष्टमसाधारण रूपमारायस्या सा प्रतिरूपा (तीसेणमित्यादि)। तस्याणमिति पूर्ववत्। आमलकल्पाया नगर्या बहिरुत्तर पौरस्ते उत्तरपूर्वारूपेईशानकोणेइत्यर्थ। दिग्भागे (अवसालवणेइति) आम्रै शालैश्चातिप्रचुरतया पलक्षित यद्वन तदाम्रशालावन तद्योगाचैत्यमपि आम्रशालवन ततिर्लेप्यादिवचनस्य भाव का वा चैत्य तच्चसज्ञाशब्दत्वात् देवता प्रतिबिम्बे प्रसिद्ध। ततस्तदाश्रयसभूतयद्देवतायागृह तदुपचारात चैत्य तच्चेहव्यन्तरा यतन द्रष्टव्य नतु भवतामर्हतामायतनहोत्था इति अभवत

सकलनगरीनउ वणकन्यूणिवउ पासादघणावइ अथवांखिउनइ प्राल्हादकरइजइ, तेणाइ करणाइ तेनगरदेसवायोग्यवइ मनोज्ञरूपवइ प्रतिरूपकहिताचणा प्रतिजणीनइनउजरूवधाइ जेहभणा तहाणा कारतेसकदशीभालि अर्थइ आमलकप्पानगरीवइ वाहिर उत्तर पूर्वबचइ दसविभागिइ सानकूणि अथवा सालवनतेणाइज नामइ चैत्ययततनहुतउ जत्रुबइ यावत् शब्दइ समस्तचैत्यनउ

[illegible] । [illegible]रातीति पुराणेयावच्छब्दकारणात् "सद्दिएकित्तिएनाएसछत्ते सभए" [illegible] धर्मामिडवर्णकपरिगृह । एव रूप च चैत्यवर्णकमुक्ता वनखडवक्तव्यता [illegible] । "सेणअवसालवणेचेइए एगेणमहयावणखडेण सव्वतो समन्ता सपरिखित्ते" । [illegible]किण्हेकिण्होभासेइत्यादि" । यावत् । "पासाइएदरसणिज्झेअभिरूवेपडिरूवे" । तव [illegible]दीय कृष्णावभासत्वादिना गुणेन मन प्रसादहेतुत्वात् दर्शनीय बहुरानन्दहेतुत्वात् अभिरूप [illegible]तिरूपशब्दार्था प्राग्वत् । तत उक्त । (जावपडिरूवेअसोगेत्यादि) । अशोकपादपस्य पृथिवी शिलापट्टकस्यच वक्तव्यता अपपातिकगुन्थानुसारेण ज्ञेया । "सावेवतस्मण वणखडस्स बहुमज्झ-देसभागे इत्यथ मह एगेअसोगवरपायवे पन्नत्ते, जावपडिरूवे" । "सेणअसोगवरपाय-वेअन्नेहिच बहुहितिलएहिजावनन्दिरुक्खेहि सव्वती समन्ता सपरिखित्ते तेण तिलगा जावनन्दिरुक्खाकुसविकुसविसुद्धरुक्खमूला, मूलमन्तोकदमन्तो जावपडिरूवा" । "तेण तिलगा जावनन्दिरुक्खा अन्नाहि बहूहि पउमलयाहि नागलयाहि असोगलयाहि" । "भूयलयाहि [illegible]यलयाहि वासन्तियलयाहि अइमुत्तयलयाहि कुन्दलयाहि सामलयाहि सव्वती [illegible]मन्तासपरिखित्ता" । "ताउणपउमलयाउजावसामालाउतिच्चकुसुमियाउजावपडिरूवाउ" । "तस्सण असोगवरपायवस्सउवरि बहवेअट्ठट्ठ मंगलगापन्नत्ता" । "तजहा" । "सोत्थिय-सिरिवच्छनदियावत्तवद्धमाणगभद्दासणकलसमच्छदप्पणा सव्वरयणा मया अच्छासण्हा लण्हा" । "घट्ठामट्ठाणीरया णिम्मलानिप्पका निक्ककडच्छाया सप्पभाससिरीया सउज्जोया पासा दीया दरिसणिज्झा अभिरूवा पडिरूवा" । "तस्सण असोगवरपायवस्सउवरि बहवे किण्हचा मरज्झया लोहितचामरज्झया हालिद्दचामरज्झया सुक्किल्लचामरज्झया अच्छा, सण्हालण्हारूप पट्टावइरामयदण्डा जलयामलगन्धिया सुरम्मापासादीया दरिसणिज्झा अहिरूवा पडिरूवा तस्सण असोगवरपायवस्सउवरि बहावच्छत्ताइच्छत्तापडागातिपडागा घटाजुयला चामरजुयलाउप्पलहत्थ [illegible]ा पउमहत्थगा कुमुयहत्थगा णलिणहत्थगा सुभगहत्थगा सौगन्धहत्थगा पोण्डरियहत्थगा महापोण्डरीयहत्थगा सहस्सपत्तहत्थगा" । "सव्वरयणामया अच्छाजावपडिरूवा" । "तस्सण असोगवरपायवस्सहेट्ठाएत्थण महाएगेपुढविसिलावट्टएपन्नत्ते इसिखधसमल्लीणे विक्खंभायामसु-प्पमाणे किण्हे अञ्जणगघण कुवलयहलहरकोसेज्जसरिसे आगासकेसकज्जलकक्केयणइदणीलअय सिकुसुमप्पगासे" । भिगजण सिगभेयरिट्ठगुलियगवलाइरेग भमरनिकुरुवभूते जम्बूफल असण-कुसुमबन्धणनीलुप्पलपत्तणिगरमरगया सासगणयणकायाराभिवन्ननिद्धे घणेअब्भुसिरे रूवगपडि रूवदरिसणिज्झे आयसगतलोवमे सुरम्मेसीहासणसठिए सुरूवेमुत्तजालखायन्तकम्मे" । "आइण गरूयबूरणवणीयतूलफासे सव्वरयणा मएअच्छेजावपडिरूवे" इति अस्यव्याख्या । तम्मणमिति पूर्ववत् वनखडस्य बहुमध्यदेशभागे, अत्र एतस्मिन प्रदेशे, महान् एकोऽशोकवरपादप प्रज्ञप्त स्तीर्थंकरगणधरै सचकिम्भूतइत्याह । जावपडिरूवे अत्र यावच्छब्देन गुन्यान्तरप्रसिद्ध विशेषणजात

सूचित तच्चेदम,—"दूरुगयकन्दमूलवट्टलट्ठसंधियसिलट्ठे, घणमसिणसिणिड्ढअणुपुव्विदसुजा णिरूवहतो विडपवरखन्धो अणेगणरपवरभुयागेज्भे कुसुमभरसमोणमन्तपत्तलविसालसाले मधुकरिभमरगणगुमगुमाइयनिलितउड्डेन्तसस्सीरीए णाणासउणगणमिहुणसुमहुरकन्न सुहपलत्तसद्दमहुरे कुसविकुसविसुद्धरुक्खमूले पासाइए दरिसणिज्जे अभिरूवे पडिरूवे" तत्र दूरमुन्नावल्वेन ग कन्दस्याधस्तात् मूलं यस्य स दूरीकृतकदमूलस्तथावृत्तोवृत्तभावेन परिणत एवनाम सर्व्वासुदि विदिक्षच शाखाभिःप्रशाखाभिश्च प्रसृतो यथा वर्तुलं प्रतिभासते इति, तथा लष्टामनोज्ञ सधय शाखागता यस्य स लष्टसन्धिस्तथाऽश्लिष्टोऽन्यैः पादपैः सहासम्पृक्तोविविक्तइत्यर्थः। त विशेषण समासः सच पदद्वय २ मीलनेनावसेयो बहूना पादाना विशेषणसमासानरपगमात् तथा घनोनिविडो मसृणःकोमलत्वक न कर्कशस्पर्शः, स्निग्धः शुभकान्तिः आनुपूर्व्यामूला परिपाट्या जन्मदोषरहित यथा भवति एव जातआनुपूर्वीसुजातः, तथा निरुपहत उपदेहिकाा द्रवरहित, उद्विद्ध उच्चःप्रवरप्रधानःस्कन्धो यस्य स घनमसृणस्निग्धानुपूर्वीसुजातनिरुपहतोद्वि प्रवरस्कन्धः, तथा अनेकस्य मनुष्यस्यये प्रवराः प्रलम्बाभुजावाहवस्तैरग्राह्योऽपरिमेयोऽनेकनरप्रव भुजाग्राह्योऽनेकपुरुषव्यामैरप्य प्रतिमेयस्थौल्य इत्यर्थः। तथा कुसुमभरे ण पुष्पसम्भारे ण सा पदवनमत्य पत्रसमृद्धाः, पत्तसमिद्धत्ति स्कःधपित्तलमिति वचनात्, विशालाविस्तीर्णाःशालाशा यस्य स कुसुमभरसमवनमत्पत्तलविशालशालः। तथा मधुकरीणा च ये गुणा गुमगुमायि गुमगुमायन्तिसम कर्म्मकत्वात्कर्त्तरिक्तप्रत्ययो गुमगुमेतिशब्द कृतवन्तः सन्त इत्यर्थो, निलीयमा आश्रयन्त उड्डीयमानस्तत्यासन्नमाकाशे परिभ्रमन्तास्तैसश्रीको मधुकरीभ्रमरगणगुमगुमायित लीयमानोड्डीयमानसश्रीकः। तथा नानाजातीयाना शकुनगणाना यानि मिथुनानि स्त्रीपु स्मा तेषा प्रमोदवशतोयानि परस्परसुमधुरास्यतएवकर्णसुखानि कर्णसुखदायकानि प्रलपितानि भा षणानि, शकुनगणाना हि स्वेच्छया क्रीडता प्रमोदभरवशतोयानि भाषणानि तानि प्रलपितानी प्रसिद्धानि ततः प्रलपितेत्युक्तं तेषा य शब्दोध्वनि स्तेन मधुरो नानाशकुनगणमिथुनसमधुरकर्णसु प्रलपितशब्दमधुरः। तथा कुशदर्भादयो विकुशावल्वचकादयस्तैर्विशुद्ध रहित वृक्षस्य कासल शोकपादपस्य इहमूल शाखादीनामपि आदिमोभागो लक्षणया प्रोच्यते, यथा शाखामूलमि प्रशाखामूलमित्यादि, ततः सकलाशोकपादपसक्कमूलप्रतिपत्तये वृक्षगृहणा मूल यस्य कुशविकुशविशुद्धवृक्षमूलः। यस्त्वैव विधः सद्दष्टृणा चित्तसन्तोषाय भवति तत आह, प्रसादी प्रसादाय चित्तसन्तोषाय हितस्तदुत्पादकत्वात् प्रसादीयो अतएव दर्शनीयो द्रष्टु योग्यः कस दित्याह, अभिरूपो द्रष्टार २ प्रत्यभिमुख न कस्य चिद्विरागहेतुरूपमाकारो यस्यसोऽभिरूप एव रूपोकुतइत्याह। प्रतिरूपः प्रतिविशिष्ट सकलजगदसाधारण रूप यस्य स प्रतिरूपः "सेणं असोगवरपायवेइत्यादि जावनन्दिरुक्खेहि" इत्यत्र यावच्छब्दकरणात् "लउएहिं छत्त वणेहिं सिरीसेहिं सत्तवण्णेहिं दहिव तेहिं लोद्धेहिं धवेहिं चन्दणेहिं अज्जुणेहिं नीमेहिं कयम्बे

फणिसेहिं। दालिमेहिं सालेहिं तालेहिं तमालेहिं पियगूहिं रायरुक्खेहिं" इति परिगृह्य। एतेच-लवकछत्तोपगशिरीष सप्तपर्णदधिपर्णलोध्रकधवचन्दनार्जुननीपकदम्बपनसदाडिमताल तमालप्रियाल प्रियगुराजवृक्ष नन्दिवृक्षा प्रायः सुप्रसिद्धाः। "तेणं तिलगा जावनन्दिरुक्खा कुसविकुसेत्यादि" ते तिलकायावन्नन्दिवृक्षाकुशविकुशविशुद्धवृक्षमूला अत्र व्याख्या पूर्ववत्। मूलवन्तः मूलानि प्रभूतानि दूरावगाढानि सन्त्येषामिति मूलवन्तः, कन्दएषामस्तीति कन्दवन्तः, यावच्छब्दकारणात् "खन्धिमन्तो तयामन्तो सालमन्तोपवालमन्तो पत्तमन्तोपुप्फमन्तो बीयमन्तो अणुपुव्विसुजायरुइल-वट्टभावपरिणया एगखंधी अणेगसाहप्पसाहविडिमा अणेगनरवामसुप्पसारियअगिज्झघणविपुल वट्टखंधी अच्छिद्दपत्ता अविरलपत्ता अवाईणपत्ता अणईइपत्ता णिद्धुयजरढपण्डुपत्ता नवहरिय-भिसन्तपत्तभारन्धयारगम्भीरदरिसणिज्जा। उवनिग्गय नवतरुणपत्तपल्लवकोमलउज्जलचलत किसलसुकुमालपवालसोभियपवरकुरगसिहरा निच्चकुसुमिया निच्चमउलिया निच्चलवइया निच्च थोच्छिया निच्चजमलिया निच्चजुयलिया णिच्चविणमिया निच्चपणमिया निच्चकुसुमियमउलि-यलवइयथवइयगुलइयगुच्छियजमलियजुयलियविणमियपणमियसुविभत्तिए डिमञ्जरि वडिंसयधरा सुकवरहिणमयणसलागाकोइलकोरुगकभिङ्गारक कोण्डलकजीवञ्जीवक नन्दीमुखकविलपिङ्गल क्खगकारण्डवचक्कवाग कलहंस सारस अणेगसउणगणमिहुणाविरियसद्दोन्नय महुसर-णाइया, सुरम्मा संपिण्डियदरियभमर महुयरिपहकरपरिल्लेन्तमत्तछप्पय कुसुमासवलोलमहुर गुमगुमन्तगुञ्जन्तदेसभागा। अब्भिन्तरपुप्फफला बाहिरपत्तोछण्णापत्तेहिय पुप्फेहियउच्छन्नपलि-छन्नानिरोगकासाउफलानिद्धफला। अकण्टकाणाणाविहगुच्छगुम्ममण्डवगसोहियाविचित्तसुह-केउपभूया। वाविपुक्खरिणिदीहियासुयसुनिवेसियरम्मजालयरगा पिण्डिमनीहारिमसुगन्धिसुह-सुरभिमणहरन्वमहया गन्धद्धणिमुयन्तासुहसेउकेउबहुला। अणेगसगडजाणजुग्गगिल्लि थिल्लिसीयसन्दमाणिपडिमोयणा पासाईयादरिसणिज्जा अभिरूवा" इतिपरिगृह्य, अस्यव्याख्या। इह मूलानि सुप्रतीतानि यानि कन्दस्याधः प्रसरन्ति कन्दास्तेषां मूलानामुपरिवर्त्तिनः ते अपि प्रतीताः स्कन्धोथुड त्वक् छल्लीशाला शाखाः प्रवालः पल्लवांकुरः। पत्रपुष्पफलबीजानि सुप्रसिद्धानि सर्वत्रापिमायेन क्वचित् भूम्निवामनुप्रत्ययः। "अणुपुव्वसुजायरुइलवट्टभावपरिणया" इति अनुपूर्व्यामूलादि परिपाट्यासुष्टुजाता आनुपूर्वीसुजाताः २ रुचिराः स्निग्धतयादेदीप्यमान-छविमन्तः, तथा वृत्तभावं न परिणताः किमुक्तम् भवति। एवं नाम सर्वासुदिक्षुचशाखाभिश्च प्रसृता यथा वर्त्तुलाः सञ्जाता इति, आनुपूर्वीसुजाताश्चते रुचिराश्च आनुपूर्व्वीसुजात रुचिरास्तेच ते वृत्तभावं परिणता, आनुपूर्वीसुजातरुचिरवृत्तभावं परिणताः। ते तथा तिलका-दयः पादपाः प्रत्येकमेकस्कन्धाप्राकृतेचास्य स्त्रीत्वमितिएगखन्धी इति सूत्रपाठः। तथा अनेकाभिः शाखाभिश्च मध्यभागेविटापविस्तारो येषां ते तथा। तथा तिर्यक्बाहुद्वयप्रसारणं प्रमाणे-व्यामः व्यामीयते परिछिद्यते रज्वाद्यनेनेतिव्यामः। बहुलवचनात् करणेवकचिदितिडप्रत्ययः।

अनेकैर्नरव्यामैः पुरुषव्यामैः सम्प्रसारितैरग्राह्योऽप्रमेयो घनो निविडो विपुलो वितस्तीर्णो वृत्तः स्कन्धो येषां ते अनेकनरव्यामसुप्रसारितागृह्यायनविपुलवृत्तस्कन्धाः। तथा अच्छिद्राणि पत्राणि येषां ते अच्छिद्रपत्रा, किमुक्तम्भवति। न तेषां पत्रेषु वातदोषतः कालदोषतो वा गड्डरिकादि-रीतिरुपजातो येन तेषु, पत्रे छिद्राण्यभविष्यन्निति अच्छिद्रपत्राः। अथवा एवं नामान्योन्य शाखाप्रशाखानुप्रवेशात्पत्राणि पत्राणामुपरिजातानि येन मनागप्यपान्तरालरूपं छिद्रं नोपलक्ष्यते इति तथा चाह। "अविरलपत्ता इति"। अत्र हेतौ प्रथमा ततोऽयमर्थः। यतोऽविरलपत्रा इति अपि कुतइत्याह। अवातीतपत्रा, वातीनानि वातोपहतानि वातेनपातितानीत्यर्थः। न वातीनानि अवातीनानि पत्राणि येषां ते तथा, किमुक्तं भवति, न प्रबलेन खरपरुषेण वातेन तेषां पत्राणि भूमौ निपात्यन्ते ततो अवातीनपत्रत्वादविरलपत्रा इति। अच्छिद्रपत्रा इत्यत्र प्रथम-व्याख्यानपक्षमधिकृत्य हेतुमाह। "अणईइपत्ता" नविद्यते इति, गड्डरिकादिरूपा येषां तान्य-नीतीनि पत्राणि येषां ते अनीतिपत्रा, अनीतिपत्रत्वाच्चाच्छिद्रपत्रा। "निद्धुयजरढपण्डुपत्ता" इति निर्द्धूतानि अपनीतानि जरठानि पाण्डुपत्राणि येभ्यस्ते निर्द्धूतजरठपाण्डुपत्रा, किमुक्तं भवति यानि वृक्षस्थानि जरठानि पाण्डुपत्राणि, वातेननिर्द्धूयनिर्द्धूयभूमौ पातितानि भूमेरपि च प्रायोनिर्द्धूय निर्द्धूयान्यत्रापसारितानीति। "नवहरियभिसन्तपत्तभारन्धयारगम्भीरदरिसणिज्जा" इति नवेन प्रत्यग्रेण हरितेन नीलेन भासमानेन स्निग्धत्वचादीप्यमानेन पत्रभारेण दलसञ्चयेन योजातोऽन्ध-कारस्तेन गम्भीरा अलब्धमध्यभागा स्ततोदर्शनीया नवहरितभासमानपत्रभारान्धकारगम्भीर-दर्शनीया। तथा उपविनिर्गतैरिति भावः। नव तरुणपत्रपल्लवैस्तथा कोमलैर्मनोज्ञैरुज्ज्वलै शुद्धैश्चलद्भिरीषत्कम्पमानैः किसलयैरवस्थाविशेषोपेतैः पल्लवविशेषैस्तथासुकुमारैः प्रवलैः पल्लवाङ्कुरैः शोभितानि वराकुराणि वराङ्कुरोपेतानि अग्रशिखराणि येषां ते उपनिर्गतनव-तरुणपत्रपल्लवकोमलोज्ज्वलचलत्किसलयसुकुमारप्रवालशोभितवराङ्कुराग्रशिखरा। इहाङ्कुर-प्रवालयोः कालकृतावस्थाविशेषादिशेषोभावनीयः। तथा नित्यसर्वकालं षट्स्वपिऋतुष्वित्यर्थः। कुसुमिता कुसुमानि पुष्पाणि सञ्जातान्येषामिति कुसुमिता, तारकादि दर्शनादितप्रत्ययः "निच्चम्मउलिया" इति नित्यं सर्वकालं मुकुलिता मुकुलानि नामकुड्मलानि कुलिकादृत्यर्थः, "निच्च लवइया" इति पल्लविता, "निच्चन्थवइया इति स्तबकिता, स्तबकभारवन्त इत्यर्थः, नित्य गुलइया इति गुल्मिता, स्तबकगुल्मौ गुच्छविशेषौ, नित्यं गोञ्छितो गोच्छवन्तः, नित्यं जमलिता यमलन्नामसमानजातीययोर्युग्मं तत् सञ्जातमेषामिति यमलिता, नित्य युगलिता युगलं सजातीय विजातीययोर्द्वन्द्वन्तदेषां सञ्जातमिति युगलितास्तथा, नित्यं सर्वकालं फलभरेण विनता ईषन्नता स्तथा, नित्य महता फलभरेण प्रकर्षं तोऽति दूरनताः प्रणता। तथा नित्यं सर्वकाल सुविभक्तास्तु विच्छित्तिकः प्रतिविशिष्टोमञ्जरीरूपोयोऽवतंसकस्तद्धरास्तद्धारिणः। एवं सर्वेपि कुसुमितत्वादिको धर्मएकैकस्य वृक्षस्योक्त साम्प्रतङ्केषाचिद्वृक्षाणां सकल कुसुमितत्वादिक

धर्म्मप्रतिपादनार्थमाह। "निच्चकुसुमियमउलिये"त्यादि किमुक्त भवति केचित्कुसुमितादि कैक-गुणयुक्ता, केचिच्छमस्तकुसुमितादि गुणयुक्ता इति, अतएव "कुसुमयमालइये" इत्यादि पदेषु कर्म्मधारय। तथा शुकवर्हिण मदनशालिका कोकिलाकोरककोभक भिङ्गारक कोगडलक जीव जीवक नन्दीमुख कपिल पिङ्गलाचकारणडव चक्रवाक कलहससारसाद्यानां अनेकेषां शकुन-गणाना मिथुनै स्त्रीपु सयुग्मै र्यैर्विचरितमितस्ततोगमनम्, तथा शब्दोन्नतिक उन्नतशब्दक मधुरस्वरञ्चनादित लपित येषु ते तथा, अतएव सुरम्या सुष्टुरमणीया। अत्र शुका कीरा वर्हिणोमयूरा मदनशालिका शारिका कोकिला पिका चक्रवाककलहससारसा प्रतीता शेषास्तु जीवविशेषा लोकतो वेदितव्या, स्तथा सपिण्डिता एकत्र पिण्डीभूता दृप्ता मदोन्मत्ततया दध्माता भ्रमरमधुकरीणाम्पहकरा सञ्जाता, "पहकरअरोहसघाया" इति देशीनाममाला वचनात् यत्र ते सम्पिण्डितदृप्तभ्रमरमधुकरीपहकरा, स्तथा परिलीयमाना अन्यत आगत्या श्रयतोमत्ता षट्पदा कुसुमासवलोला किञ्जल्कपानलम्पटा मधुर गुमगुमायमाना गुञ्जतश्च शब्दविशेष च विदधाना देशभागेषु येषां ते परिलीयमानमत्तषट्पदकुसुमासवलोलमधुरगुमगुमाय मानगुञ्जन्तदेशभागा। गमकत्वादेवमपि समास, स्ततो भूय पूर्वपदेन सह विशेषण समास। तथा अभ्यन्तराणि अभ्यन्तरभागवर्त्तीनि, पुष्पाणि च फलानि च पुष्पफलानि येषां ते तथा। "वाहिरपत्तोच्छण्णा" इति वहित पत्रैश्छन्ना व्याप्ता वहि पत्रछन्ना, स्तथा पत्रैश्च पुष्पैश्च अवच्छन्नपरिछन्ना अत्यन्तमाच्छादिता, स्तथा नीरोगकारोगवर्जिता अकण्टका कण्टकरहिता न तेषां प्रत्यासन्नावबूलादि वृक्षा सन्तीतिभाव, तथा स्वादूनि फलानि येषां ते स्वदुफला, स्तथा स्निग्धानि फलानि येषां ते स्निग्धफला, स्तथा 'प्रत्यासन्नैर्नानाविधैर्नाना-प्रकारै गुच्छैर्वृन्ताकीप्रभृतिभि र्गुल्मै र्नवमालिकादिभिर्मण्डपकै शोभिता नानाविधगुच्छगुल्म-मण्डपकशोभिता, स्तथा विचित्रै र्नानाप्रकारै शुभैर्मङ्गलभूतै केतुभि र्ध्वजै र्वहुला व्याप्ता विचित्रशुभकेतुवहुला, तथा "वाविपुक्खरिणीदीहियासुयसुनिवेसियरम्मजालघरगा," वाप्यश्चतुर-स्राकारास्तापएव वृत्ता पुष्करिण्यो, यदि वा पुष्कराणि विद्यन्तेयासु ता पुष्करिण्ये दीर्घिका ऋजुसारिण्य, वापीषु पुष्करिणीषु दीर्घिकासु च सुष्टुनिवेसितानि रम्याणि, जालगृहकानि येषु ते वापीपुष्करिणीदीर्घिकासु सुनिवेशितरम्यजालगृहका। तथा पिण्डिमा पिण्डिता मती निर्हारिमादूर विनिर्गच्छन्ती पिण्डितनिर्हारिमा ता सुगन्धिसद्गन्धिका शुभसुरभिरण्यो गन्धा न्तरेभ्य सकाशात् मनोहर शुभसुरभिमनोहरा तां च "महया" इति प्राकृतत्वात्। द्वितीयार्थे तृतीया महतीमित्यर्थ। "गन्धघ्राणिं" यावद्भिर्गन्धपुद्गलैर्गन्धविषयेघ्राणिरुपजायते, तावती *गन्धपुद्गलसङ्हतिरुपचारात् गन्धघ्राणिरित्युच्यते,* तान्निरन्तर मुञ्चन्त। तथा "सुहसेउकेउ वहुला" इति शुभा प्रधाना सेतवोमार्गा आलवालपाल्यो वाकेतवो ध्वजा वहुलावहवो येषां ते तथा। "अणेगरहसगडजाणजुग्गगिल्लिथिल्लिसिवियपडिमोयणा" इति, रथादिविविधा क्रीडारथा

मनुष्यारयाश्च शकटानि प्रतीतानि यानानि सामान्यतः शेषाणि वाहनानि युग्यानि गोल्लविषय प्रसिद्धानि द्विहस्तप्रमाणानि वेदिकोपशोभितानि जम्पानानि शिविकाः कूटाकारेणाच्छादिता जम्पानविशेषाः, स्यन्दमानिका पुरुषप्रमाणजम्पानविशेषाः, एतेषां रथशकटादीनामधोवि- स्तीर्णत्वात् प्रतिमोचनं येषु ते तथा। "पासादीया" इत्यादि पदचतुष्टयं प्राग्वत्, "तेणं तिलगा" इत्यादि पाठसिद्ध, "नवरन्नागलयाहिं" न्नागाद्द्रुमविशेषाः, "वणलयाहितिवणा" चपिद्रुमविशेषाः। इमाश्चान्यलतारचमेकशाखाकाणां द्रष्टव्यं येद्द्रुमाद्द्रागतेकशाखा न तु दिग्विदिक्, प्रवृत्त बहुशाखास्ते लता इति प्रसिद्धा। "निच्चकुसुमिताउ जावपडिरूवा" इत्यत्र यावच्छब्दकरणात् 'निच्चमालइयाउ णिच्चलवइयाउ णिच्चथवइयाउ निच्चगुलिइयाउ निच्चगुम्मियाउ निच्चजमलि याउ निच्चजुयलियाउ निच्चविणमियाउ निच्चपणमियाउ निच्चसुविभत्तपडिमञ्जरिवडेंसगधरी उ निच्च"। "कुसुमियमालइयथवइयलवइयगुलियविणमिय सुविभत्तपडिमञ्जरिवडिंसगधरीउ सपिडियदरियभमरमहुयरिपहकरपरिल्लित मत्तछप्पय कुसुमासवलोलमहुकरिगायं गुमगुमेंत- गुञ्जं तदेसभागाउपासाइयाउदरिसणिज्जाउभिरुवाउपडिरूवाउ" इति एतच्चसमस्तं प्राग्वत् व्याख्येयं। तस्यणमिति प्राग्वत्, अशोकवरपादपस्य उपरिबहूनि अष्टाष्टौ मङ्गलकानि प्रज्ञप्तानि। तद्यथा, स्वस्तिकः "श्रीवच्छनंदिया वत्तं" इति नन्द्यावर्त्तः क्वचित् नन्दावत्तइति पाठः, तत्र नन्दावर्त्त इति शब्दसंस्कारः। वद्धमानकं शरावसंपुटं भद्रासनं कलसोमत्स्ययुग्मं दर्पणः। एतानि चाष्टावपि मङ्गलकानि सर्व्वरत्नमयानि, अच्छानि आकाशस्फटिकवदतीव- स्वच्छानि श्लक्ष्णानि श्लक्ष्णपुद्गलस्कन्धनिष्पन्नानि, श्लक्ष्णनिष्पन्नपटवत्लष्टानि मसृणानि घुटितपटवत्। "मट्ठा" इतिमृष्टानीवमृष्टातिखरशाणया पाषाणप्रतिमानवत्। "मट्ठा" इति मृष्टानीवमृष्टानि सुकुमारशाणयापाषाणप्रतिमेव अतएव नीरजांसि स्वाभाविकं रजोरहितत्वात्। निर्म्मलान्यागन्तुकमलाभावात् निष्पङ्कानि कनकविकलानि कर्द्दमरहितानि वा। "निक्कङ्कट छाया" इति निष्कङ्कटानि निष्कवचानि रावणानिरुपघातेतिभावार्थ, छायादीप्तिर्येषां तानि निष्कङ्कटछायानि। सप्रभाणि स्वरूपतः प्रभावन्ति समरीचानि वहिर्विनिर्गतकिरणजालानि अतएव सोद्योतानि वहिर्व्यवस्थितवस्तुस्तोमप्रकाशकराणिपाइया इत्यादि। पदचतुष्टयव्याख्या पूर्ववत्। तस्सणमित्यादि तस्यणमिति प्राग्वत्, अशोकवरपादपस्योपरिबहव कृष्णचामरध्वजाः चामराणिच ध्वजाश्च चामरध्वजाः कृष्णाश्च ते चामरध्वजाश्च कृष्णचामरध्वजाः। एवं नील- चामरध्वजाः लोहितचामरध्वजाः, हारिद्रचामरध्वजाः। एतेच कथम्भूता इत्याह। "अच्छा" स्फटिकवदतिनिर्मलाः, श्लक्ष्णाः श्लक्ष्णपुद्गलस्कन्धनिष्पन्नाःरूप्यपट्टा इति रूप्यो रूप्यमयोवज्रमयस्य दण्डस्योपरिपट्टो येषां ते रूप्यपट्टाः वयरदण्डा इति वज्रोवज्ररत्नमयोदण्डो रूप्यपट्टमध्यवर्ती येषां ते वज्रदण्डाः। तथा जलजानामिव जलजकुसुमानां पद्मादीनामिवामलो गन्धो येषां ते जलजा- मलगन्धकाः। अतएव सुरम्या अतिशयेन रमणीयाः, पासाइया इत्यादि पूर्ववत्। तस्यणमिति

प्राग्वत्। अशोकवरपादपस्योपरि बहूनि छत्रातिछत्राणि छत्रात् लोकप्रसिद्धादेकसङ्ख्याकादतिशा-यीनि छत्राणि। उपर्य्यधोभागेन द्विसङ्ख्यानि त्रिसङ्ख्यानि वा छत्राति छत्राणि तथा बहवः पडागाइ पडागा इति पताकाभ्यो लोकप्रसिद्धाभ्योऽतिशायिन्य पताका पताकाति पताका बहूनितथैव छत्रातिछत्रादिषु, घण्टा युगलानि चामरयुगलानि तथा तत्र तत्रप्रदेशे उत्पलहस्तका उत्प-लाख्य जलजकुसुमसमयातविशेषा, एवं पद्महस्तका कुमुदहस्तका नलिनहस्तका सुभगहस्तका सौगन्धिकहस्तका पुण्डरीकहस्तका महापुण्डरीकहस्तका शतपत्रहस्तका सहस्रपत्रहस्तका उत्पलसार्द्धभक्तम्। पद्म सूर्यविकासिपङ्कज कुमुदं कैरव नलिनमीषद्रक्त पद्म सुभग पद्म-विशेष। सौगन्धिक कल्हार पुण्डरीक श्वेताम्बुज तदेवातिविशाल महापुण्डरीक शतपत्र सहस्रपत्रे पत्रसङ्ख्याविशेषा। १वजिवी पद्मविशेषौ एतेच छत्रातिछत्रादय सर्वेपि सर्वरत्न मया सर्वात्मनारत्नमया। "अच्छासण्हा" इत्यादि विशेषणजातपूर्ववत्। तस्सणमित्यादि तस्यणमिति प्राग्वत्। अशोकवरपादपस्याधस्तात् एत्यणमिति अशोकवरपादपस्याधस्तात् एत्यणमिति अशोकवरपादपस्ययदधोऽत्रणमिति पूर्ववत्, एकोमहान् पृथ्वीशिलापट्टक प्रज्ञप्त, कथं भूतइत्याह, "इसिखन्धीसमल्लीणे" इत्यादि इत्यत्र स्कन्ध मधुडमित्युच्यते, तस्याशोकवर पादपस्य यत् ईषत् मनाक् सम्यग्लीन स्तत्रासन्नइत्यर्थ। "विक्खम्भायामसुप्पमाणे" इति विक्ख-म्भेनायामेन शोभनमौचित्यानतिवर्त्तिप्रमाणं यस्य स विष्कम्भायामसुप्रमाण। कृष्णः कृष्णत्वमेव निरूपयति "अञ्जणघणकुवलयहलधरकोसेज्जसरिसे" अञ्जनकी वनस्पति विशेष, घनोमेघ कुवलय नीलोत्पल हलधरकौशेय बलदेववस्त्रन्ते सदृश समानवर्ण। "आगासकेसकज्जलकक्केयण इन्दनीलअयसिकुसुमप्पगासे" आकाश धूलीमेघादिविरहित केशा शिरसिजा कज्जल प्रतीत कर्केतनेन्द्रनीलौमणिविशेषौ, ऽतसीकुसुम प्रसिद्धमेतेषामेव प्रकाशो दीप्तिर्यस्य स तथा "भिंग-ञ्जणभङ्गभेयनीलगुलियगवलाइरेगे" इति भृङ्गाश्च तुरिन्द्रियपक्षिविशेषो ऽञ्जन सौवीराञ्जन तस्य भङ्गेन विच्छित्याभि" छेदोऽञ्जनभङ्गभेदोरिष्टको रत्नविशेषो नीलगुटिका प्रतीता। गवल माहिषशृङ्गान्तेभ्योऽपि कृष्णत्वेनातिरेकौ यस्य स तथा। "भमरनिकुरु बभूये" इत्यत्र भूतशब्दोऽप-मवाची यथा घटादेश सुरलोकभूत सुरलोकोपमइत्यर्थ,ततोयमर्थो, भ्रमरनिकुरम्बोपमो,"जम्बू फलअसणकुसुमबन्धणणीलुप्पलपत्तनिकरमरगय आसासगनयणकीयासिवत्ते"। जम्बूफलानि प्रती-तानि असनकुसुमबन्धन असनपुष्पवृन्त नीलोत्पलपुष्पपत्रनिकरोमरकतमणि प्रतीत। आसासको-दीधकाभिधानोवृक्षो नयनकीकानेत्रमध्यतारा। "अमि" षड गतेषामेवराशे रस्यसतथा, स्निग्धानु-रूपो घनोनिविडोनतुस्फोटकद्रवमध्यशुषिर। "अहुसिर" इतिशब्दस्याशुषिरसहित। "रूवगपडि-रूवदरिसणिज्जे" इति रूपकाना यानि तत्र प्रतिरूपाणि सक्रान्तानि प्रतिबिम्बानितैर्दर्शनीयो,रूपक प्रतिरूपदर्शनीयो, आदर्शतलोपमो आदर्शोदर्पणस्तस्यतलन्तेन समतयोपमायस्य आदर्शतलोपम। सुष्टुमनांसिरमयतीति सुरम्य कृत्वहुलमितिवचनात्कर्त्तरियप्रत्यय। "सीहासणसंठिए" इति

उवत्तियगामेण[१]। सेउराया[२] धारिणी देवी सामी समासट्ट[३] परिसानिग्गया[४] राजा[५] जावपज्जुवासइ[६]।

सिंहासनस्येव संस्थितं संस्थानं यस्य स सिंहासनसंस्थितः। अतएव सुरूपः शोभनं रूपमाकारो यस्य स सुरूपः। इतश्च सुरूपोयतः आह। "मुत्ताजालखइयन्तकम्मे" मुक्ताफलसमूहाः खचितानि अन्तकर्म्मसु प्रान्तप्रदेशेषु यस्य स मुक्ताजालखचितान्तकर्म्मा। "आइणगरुयब्बूर नवनीयतूलफासे" आजिनकं चर्म्ममयं वस्त्रं रूतं प्रतीतम्बूरो वनस्पतिविशेषो, नवनीत म्रक्षणं तूलमर्कतूलं तेषामिव कोमलतयास्पर्शोयस्य स आजिनकरूतबूरनवनीततूलस्पर्शः। "सव्वरयणामये" इत्यादि विशेषणकदम्बकं प्राग्वत् ॥ ८ ॥ (सेयराया धारिणीदेवी जावसमोसरणसम्मत्तमिति) तस्यामामलकल्पाया नगर्याश्वेतोनामराजा, तस्य समस्तान्तःपुरप्रधानाभार्या सकलगुणधारणा धारिणी नामदेवी। "जावसमोसरणसम्मत्त" मिति यावच्छब्दकारणात् राजवर्णको, देवीवर्णकः समवसरणञ्चौपपातिकग्रन्थानुसारेण तावद्वक्तव्यं यावत्समवसरणं समाप्तं, तथैव "तत्थणं आमलकप्पाएनयरीएसेएणामरायाहोत्था। महयाहिमवन्त मलयमन्दरमहिन्दसारे अच्चन्तविसुद्धाराय कुलवंसप्पसूए निरन्तरं रायलक्खणविराइयअङ्गमङ्गे बहुजणबहुमाणपूइए सव्वगुणसमिद्धे खत्तिए मुइए मुद्धाहिसित्ते माउपिउसुजाए दयपत्ते सीमङ्करे सीमन्धरे खेमङ्करे खेमन्धरे मणुस्सिन्दे जणवयपाले जणवयपुरोहिए सेउकरे नरपवरे पुरीसवरे पुरिससीहे पुरिसवग्घे पुरिसआसिवसे पुरिसवरपोण्डरीए पुरिसवरगन्धहत्थी अड्ढेदित्तेवित्ते विच्छिन्नविपुलभवनसयणासणजाणवाहणाइन्ने धनबहुजायरूवरजए आओगपओगसंपउत्ते विच्छड्डियपउरभत्तपाणा बहुदासीदासगोमहिसगवेलगप्पभूए पडिपुन्नजन्तकोसकोट्ठागाराउहघरे बलवदुब्बलपच्चामित्ते उहयकण्टय म्मलियकण्टयम् उद्धियकण्टय अप्पडिकण्टय उहयसत्तु निहयसत्तु मलियसत्तु निज्जियसत्तु पराइयसत्तु ववगय दुब्भिक्खदोसमारि भयविमुक्कं खेमसिवसुभिक्खं पसन्तडिम्बडमरं रज्जंपसासेमाणेविहरइ तस्सणं सेयस्सरन्नोधारिणीनामदेवी होत्था, सुकुमालपाणिपाया अहीणपुण्णपञ्चन्दियसरीरा

वर्णकज्ञाणिवउ देवावाणोग्यकहइ ते आमृमालवनमाहि अशोकवचकहइ तेह अशोकवृक्षहेविप्रथवीसिला पवचकहइ वनशोकवृक्षचैत्यप्रथिवी सिलापट्टवक्तव्यतावर्णकउ वार्द्दसुत्रजिहा परिज्ञाणिवउ स्वेत नाम राजा धारणीनामदेवीपट्टराणी स्वामी भगवंत श्रीमहावीर समोसस्था परिषदीवा दिवानीकली स्वेतराजापणिवादिवाआवऊ यावत्सम्भिइ कीणिकनीपरिसेवाकरइकहइ राजवर्णकराणीवर्णक

(पाठान्तराणि) १। उववातियगामेणं। २। सेरराया, तेणासेयोराय, सेएराया। ३। सामी समोसढे, सामीसमोसढो, जाव समोसरणं सम्मत्तम्। ४। परिसानिग्गया, परिसाणिग्गय। ५। राजा, राया। ६। जाव पज्जुवासइ, जावपज्जुवासति।

लक्खणवंजणगुणोववेया माणुम्माणप्पमाणपडिपुन्नसुजायसव्वंगसुन्दरङ्गी ससिसोमागारकन्तपियदंसणा सुरूवा करयलपरिमियपसत्थतिवलियमज्झा कुण्डलुल्लिहियपीणगण्डलेहा कोमुइरयणियरविमलपडिपुन्नसोमवयणा सिङ्गारागारचारुवेसा संगयगय हसिय भणिय चिट्ठिय विलाससललियसंलावनिउणजुत्तोवयारकुसला सुन्दरथणजघनवयणकरचरणणयणलावण्णविलासकलिया सेयवरवत्थपरिहिया अगुरुत्तो गन्धिवत्ताउद्धे सहकरिसि रसवणगन्धे पञ्चविहेमाणुस्सए कामभोगे पच्चणुभवमाणा विहरइ"। एष राजदेवी वर्णकोऽस्य व्याख्या। "महयाहिमवन्तेति" महाहिमवान् हैमवतक्षेत्रस्योत्तरतः सीमाकारी वर्षधरपर्वतो मलयः पर्वतविशेषः सुप्रतीतो मन्दरो मेरुः महेन्द्रः शक्रादिको देवराजस्तद्वत्सारः प्रधानो महाहिमवन्महामलयमन्दरमहेन्द्रसारः। तथा अत्यन्तविशुद्धे राजकुलवंशे प्रसूतोऽत्यन्तविशुद्धराजकुलवंशप्रसूतः। तथा "निरन्तरं रायलक्खणविराइयङ्गमङ्गो" इति निरन्तरमपलक्षणाव्यवधानाभावेन राजलक्षणैः राज्यसूचकैर्लक्षणैर्विराजितानि, अङ्गप्रत्यङ्गानि अङ्गप्रत्यङ्गानि यस्य स निरन्तरराजलक्षणविराजिताङ्गप्रत्यङ्गः। तथा बहुभिर्जनैर्बहुमानेनान्तरङ्गप्रीत्या पूजितो बहुमानपूजितः कस्मादित्याह, "सव्वगुणसमिद्धे" सर्वैः शौर्यादिभिर्गुणैः समृद्धः स्फीतः सर्वगुणसमृद्धस्ततो बहुजनबहुमानपूजितो गुणवत्सु प्रायः सर्वेषामपि बहुमानसम्भवात्। तथा 'खत्तिए" इति क्षत्रस्यापत्यं क्षत्रियः क्षत्रादिय इति इयप्रत्ययः, अनेन नवभाग्यमत्तिनन्दवत राजकुलवंशप्रसूतोऽपि न हीनजातीयः किन्तु समजातीय इत्यावेदितं, तथा मुदितः सर्वकालं हर्षवान् प्रत्यनीकराजकृतोपद्रवासम्भवात् तदसम्भवश्च प्रत्यनीकानामेवाभावात् तथा चाह, "मुद्धाभिसित्तेमाय" सर्वैरपि प्रत्यन्तराजैः प्रतापमसहमानैरन्यथास्माकमस्थितिरिति परिभाव्य मूर्द्धभिः मस्तकैरभिषिक्तः पूजितो मूर्द्धाभिषिक्तः तथा मातृपितृभ्यां सुजातो मातृपितृसुजातः। अनेन समस्तगर्भाधानप्रभृति सर्भाविदोषविकलइत्यावेदितं। तथा दयाप्राप्तः स्वभावतः शुद्धजीवद्रव्यत्वात्तथा सेवामागतानां पूर्व्वापूर्व्वनृपाणां सीमां मर्यादां करोति, यथा एव वर्त्तितव्यमेवन्नेति सीमङ्करः। तथा पूर्व्वपुरुषपरम्परायातां स्वदेशे प्रवर्त्तमानां सीमां मर्यादां धारयति पालयति नतु विलम्पतीति सीमन्धरः। अत एव मनुष्येन्द्रः तथा जनपदस्य पितेव जनपदपिता, कथं पितेवेत्यत आह। जनपदपालः जनपदं पालयतीति जनपदपालः, स्ततो जनपदस्य पितेव, तथा जनपदस्य शान्तिकारितया पुरोहित इव जनपदपुरोहितः, तथा सेतुर्मार्गस्तं करोतीति सेतुकरो मार्गदर्शक इति भावः। केतुश्चिह्नं तत्करोतीति केतुकरोऽद्भुतसविधानककारीति भावः। तथा नरेषु मनुष्येषु मध्ये प्रवरो नरप्रवरः स च सामान्यमनुष्यापेक्षयापि स्यादत आह। "पुरिसवरे" पुरुषेषु पुरुषाभिमानिषु मध्ये वरः प्रधानम् उत्तमपौरुषोपेतत्वादिति पुरुषवरः। यतः पुरुषसिंह इवाप्रतिमल्लतया पुरुषसिंहः, तथा पुरुषेषु व्याघ्र इव शूरतया पुरुषव्याघ्रः। पुनरः आशीविष इव दोषविनाशनशीलतया पुरुषाशीविषः। पुरुषोवरपुण्डरीकमिवोत्तमतया सुजनसरोवरभूषकत्वात् पुरुषवरपुण्डरीकः। पुरुषोवरगन्धहस्तीव परानसहमानात् प्रतीति

पुरुषवरगन्धहस्ती ततो भवति, पुरुषवरस्तथा चाद्य समृद्वीदीप्त शरीरत्वचादेर्दीप्यमानत्वात् इत्तोवाहप्तारिमानमर्द्दनशीलत्वादतएव वित्तोजगत्प्रतीतो यदुक्तमाद्य इति तदेव सविस्तरमुपदर्शयतिच्छिरणीत्यादि। विस्तीर्णानि विस्तारवन्ति विपुलानि प्रभूतानि भवनानि गृहाणि शयनानि आसनानि च प्रतीतानि यानानि रथादीनि वाहनानि अश्वादीनि एतैराकीर्णोव्याप्तोयुक्तो विस्तीर्णविपुलभवनशयनासनयानवाहनाकीर्ण। तथा बहुधन बहुजातरूप सुवर्णरजत च रूपे यस्य स बहुधनबहुजातरूपरजत। तथा आयोगप्रयोगसयुक्त आवाहन विसर्जन कुशल। तथा विच्छर्दित तथाविध तथाविधविशिष्टोपकारकारितया विसृष्टमुकुर्कटिकादिपु प्रचुर भक्तपान यस्मिन्। राज्यमनुशासति सविछर्दितप्रचुरभक्तपान, अनेन पुण्याधिकतया तस्मिन् राज्यमनुशासति दुर्भिक्षमभूदिति कथ, तथा बहूना दासीना दासाना गवा बलीवर्दाना महिषाणा गवा स्त्रीगवानो एडकाना च प्रभु बहुदासीदासगोमहिषगवेलक प्रभु,स्तत स्वार्थिककप्रत्यय विधानात्प्रभुक। तथा प्रतिपूर्णानि भृतानि यन्त्रकोशकोष्टागाराणि यन्त्रगृहाणि कोशगृहाणि भाण्डागाराणि कोष्टगृहाणि धान्याना कोष्टागाराणि गृहाणीति भाव। आयुधगृहाणि च यस्य स प्रतिपूर्णय त्रकोशकोष्टागारायुधगृह। तथाबल शारीरिक मानसिक च यस्यास्ति स बलवान। दुर्बलप्रत्यमित्रो दुर्बलनामकारण्यवासल इति भाव। एव भूत सन् राज्य प्रशासन् विहरत्य च तिष्टति इति योग। कथ भूत राज्यमित्याह, अपहतकण्टक इहदेशोपद्रवकारित्वसारटा कण्टकाइव कण्टकास्ते अवहता अवकासानासीदनेन स्थगिता यस्मिन तत अपहत कण्टक, तथा मलिनाउपद्रवकुर्वाणा मान म्लानिमापादिता कण्टका यत्र तत्त मलिनकण्टक। तथा उद्धृता स्वदेशत्याग जनेन जीवितत्याजनेन वा कण्टका यत्र तत उद्धृतकण्टक। तथा नविद्यते प्रतिमल्ल कण्टको यत्र तदप्रतिकण्टक। तथा "उहय सत्तु" इति प्रत्यनीकाराजान शत्रवाते अपहता स्वावकाशमलभमानीकृता यत्र तत् अपहतशत्रुहतानिहताराणाम्याणे पतिता शत्रवो यत्र तन्निहतशत्रु। तथा मलितास्तत सैन्य वासापादानतोमार्मम्लानिमापादिता शत्रवो यत्र तत् मलितशत्रु। तथा स्वात्मविनाशेन स्वदेशविनाशेन जीवितनाशनेन वा उद्धृता शत्रवो यत्र तत उद्धृत शत्रु। एतदेव विशेषणद्वयेन व्याचष्टे निर्जितशत्रुपराजितशत्रु। तथा व्यपगत दुर्भिक्ष दोषमारिश्च यत्र तत् व्यपगत दुर्भिक्षदोषमारि। तथा भयेन स्वदेशोत्थेन परचक्रकृतेन वा विमुक्तम्। अतएव क्षेमं निरुपद्रव शिव शान्त सुभिक्ष शोभना शुभाभिक्षा दर्शिनिनाञ्च यत्र तथा सुभिक्षम्। तथा प्रशान्तानि डिम्बानि विघ्नाडमराणि राजकुमारादिकृतविद्वरा यत्र तत प्रशान्तडिम्बडामरम। देवी वर्णके "सुकुमालपाणिपाया" इति सुकुमारौ पाणीपादौ च यस्या सा सुकुमारपाणिपादा। तथा अहीनानि अन्यूनानि स्वरूपत प्रतिपूर्णानि लक्षणत पञ्चापीन्द्रियाणि यस्मिन् तत्तथाविध शरीर यस्याम, हीनप्रतिपूर्णपञ्चेन्द्रियशरीरा। तथा लक्षणानि स्वस्तिकचक्रादीनि व्यञ्जनानि मषतिलकादीनि गुणा सौभाग्यादयस्तैरुपेता लक्षणव्यञ्जनगुणोपपेता। "उदवायपद्गत" इति शब्दत्रय ।धाने

## तेणं कालेणं तेणं समयेणं।

पृषोदरादय इत्यसकारलोपे उपपेता इति द्रष्टव्यम्। "माणुम्माणपमाण पडिपुन्नसुजात सव्वङ्ग सुन्दरङ्गी" इति तत्रमान जलद्रोणप्रमाणता कथमिति चेत् उच्यते, जलस्यातिभृते कुण्डे पुरुषे स्त्रिया वा निवेशितायां यज्जलन्निस्सरति तद्यदि द्रोणप्रमाणं भवति तदा स पुरुषः स्त्री वा मानप्राप्ता उच्यते, तथा उन्मानं अर्द्धभारप्रमाणता सा चैव तुलायामारोपित पुरुषः स्त्री वा यद्यर्द्धभारं तुलति तदा स उन्मानप्राप्ताभिधीयते। प्रमाणं स्वाङ्गुलेनाष्टोत्तरशतोच्छ्रयिता ततोमानोन्मानप्रमाणैः प्रतिपूर्णान्यनूनानि सुजातानि जन्मदोषरहितानि सर्वाणि अङ्गानि शिर प्रभृतीनि यानि तैः सुन्दराङ्गी मानोन्मानप्रमाणप्रतिपूर्णसुजातसर्वाङ्गसुन्दरी। तथा शशिवत्सौम्याकारमरौद्राकारं कान्तं कमनीयं प्रियं द्रष्टृणामानन्दोत्पादकं दर्शनं रूपं यस्याः सा शशिसौम्याकारकान्तप्रियदर्शना, अतएव सुरूपा, तथा करतलपरिमितो मुष्टिग्राह्यः प्रशस्तलक्षणोपेत त्रिवलिको वलित्रयोपेतो रेखात्रयोपेतो वलिकोवलवान्मध्यो मध्यभागो यस्याः सा करतलपरिमितप्रशस्तत्रिवलीकवलिकमध्या। तथा कुण्डलाभ्यामुल्लिखिता घृष्टा गण्डलेखा कपोलविरचितमृगमदादिरेखा यस्याः सा कुण्डलोल्लिखितगण्डलेखा। "कौमुदीरयणिगरविमलपडिपुन्नसोमवयणा" कौमुदीकान्तिः कौमुदी पौर्णमासी तस्या रजनीकरश्चन्द्रस्तद्वत् विमलं निर्मलं प्रतिपूर्णमन्यूनातिरिक्तमानं सौम्यमरौद्राकारं वदनं यस्या सा तथा। शृङ्गारस्य रसविशेषस्यागारमिवागारं अथवा शृङ्गारो मण्डनभूषणाटोपस्तत्प्रधान आकार आकृतिर्यस्याः सा तथा। तथा चारुवेषो नेपथ्यो यस्याः सा तथा, ततः कर्मधारयः शृङ्गारागारचारुवेषा। तथा सङ्गता ये गतहसितभणितचेष्टितविलासा यश्च निपुणो युक्तश्च जनपरजनान् प्रत्युपचारस्तेषु कुशला सङ्गतगतहसितभणितचेष्टितविलाससललितसंलापनिपुणयुक्तोपचारकुशला, तत्र सङ्गतं नासङ्गतं यद्गतं गमनं गृहस्यैवान्तर्गमनं नतु बहिः स्वेच्छाचारितया। सङ्गतं हसितं यत् कपोलविकासमात्रसूचितनत्वट्टहासादिहसितं। "कपोलकहियं" मिति वचनात् सङ्गतं भणितं यत्समागते प्रयोजने मर्मभणितं परिहारेण विवक्षितार्थमात्रप्रतिपादनसङ्गतचेष्टितं यत्, कुचजघनाद्यवयवाच्छादनपरतयोपवेशनशयनोत्थानादि सङ्गतो विलासः स्वकुलौचित्येन शृङ्गारादिकरणं, तथा सुन्दरैः स्तनजघनवदनकरचरणनयनलावण्यविलासैः कलिता। अत्र विलासः स्थानासनगमनादिरूपश्चेष्टाविशेषः। उक्तञ्च। स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणाञ्चैव उत्पद्यते विशेषो यः श्लिष्टोऽसौ विलासः स्यात्। अन्येत्वाहुः विलासो नेत्रजो विकार स्तथाचोक्तं हावो मुखविकारः स्यात् भावश्चित्तसमुद्भव विलासो नेत्रजो ज्ञेयो विभ्रमो भ्रूसमुद्भवः। (तेणं कालेणं तेणं समएणं) तस्मिन् भगवन्महावीरे जावचोत्तीसे बुद्धातिशयातिशयेस पणतीस सच्चातिशयाति सम्पत्ते आगासगएणं चक्केणं आगासगएणं छत्तेणं आगासियाहिं सेयवरचामराहिं

तण्डकालिदय्यसपणीगाचउयान्यायानेकेइउड जेवड्नीचवसभिभा-तत्यामलकप्पाइपथारीय

आगासफालियामएणं सपायपीढेणं सीहासणेणं पुरतो धम्मज्झएणं पगड्डिज्जमाणेणं चउद्दसहिं समणसाहस्सीहिं छत्तीसाए अज्जियासाहस्सीहिं सद्धिं सम्परिवुडे पुव्वाणुपुव्विं चरमाणे गामाणुगामं दूइज्जमाणे सुहंसुहेणं विहरमाणे जेणेव आमलकप्पा नयरी जेणेव अम्बसालवणे चेइए जेणेव असोगवरपायवे जेणेव पुढविसिलापट्टए तेणेव उवागच्छइ २ अहापडिरूवं उग्गहं उगिण्हइ उगिण्हित्ता असोगवरपायवस्स अहे पुढविसिलापट्टगंसि पुरत्थाभिमुहे सम्पलियंकनिसण्णे संजमेणं तवसा अप्पाणं भावेमाणे विहरइ'। इदं सुगमम्, नवरं "आव चोत्तीसाए" इत्यत्र यावत्करणात् "आइगरे तित्थगरे" इत्यादिकः समस्तोऽपि औपपातिकग्रन्थप्रसिद्धो भगवद्वर्णको वाच्यः, स चातिगरीयानिति न लिख्यते केवलमौपपातिकग्रन्थादवसेयः। चोत्तीसाए बुद्धवयणातिसेसपत्ते इति चतुस्त्रिंशद्बुद्धानां भगवतामर्हतां वचनप्रमुखाः सर्वस्वभाषानुगतं वचनं। धम्मावबोधकरमित्यादिना उक्तस्वरूपा ये अतिशेषा अतिशयास्तान् प्राप्तः चतुस्त्रिंशद्बुद्धवचनातिशेषस्योपादानमत्यन्तोपकारितया प्राधान्यख्यापनार्थं मन्यथा देहवैमल्यादयस्तेऽप्यवगन्तव्याः, तथाच "देहं विमलसुगन्धं आमयपासेयवज्जियं अरयं। रुहिरं गोक्खीराभं निव्वीसं पंडुरं मंस" मित्यादि, 'पणतीसाए सच्चवयणातिसेसपत्ते" पञ्चत्रिंशता ये सत्यवचनस्यातिशेषा अतिशयास्तान् सम्प्राप्त पञ्चत्रिंशत्सत्यवचनातिशेषसम्प्राप्तः, ते चामी सत्यवचनातिशेषाः, संस्कारवत्त्वं १, उदात्तत्वं २, उपचारोपेतत्वं ३, गम्भीरशब्दत्वं ४, अनुनादित्वं ५, दक्षिणत्वं ६, उपनीतरागत्वं ७, महार्थत्वं ८, अव्याहतपूर्वापरत्वं ९, शिष्टत्वं १०, असन्दिग्धत्वं ११, अपहृतान्योत्तरत्वं १२, हृदयग्राहित्वं १३, देशकालाव्यतीतत्वं १४, तत्त्वानुरूपत्वं १५, अप्रकीर्णप्रसृतत्वं १६, अन्योन्यप्रगृहीतत्वं १७, अभिजातत्वं १८, अतिस्निग्धमधुरत्वं १९, अपरमर्मवेधित्वं २०, अर्थधर्माभ्यासानपेतत्वं २१, उदारत्वं २२, परनिन्दात्मोत्कर्षविप्रमुक्तत्वं २३, उपगतश्लाघत्वं २४, अनपनीतत्वं २५, उत्पादिताविच्छिन्नकौतूहलत्वं २६, अद्भुतत्वं २७, अनतिविलम्बित्वं २८, विभ्रमविक्षेपकिलिकिञ्चितादिवियुक्तत्वं २९, अनेकजातिसंश्रयाद्विचित्रत्वं ३०, आहितविशेषत्वं ३१, साकारत्वं ३२, सत्त्वपरिगृहीतत्वं ३३, अपरिखेदितत्वं ३४, अव्युच्छेदित्वं ३५, "चिति" तत्र संस्कारवत्त्वं संस्कृतादिलक्षणयुक्तत्वं, उदात्तत्वं उच्चैर्वृत्तिता, उपचारोपेतत्वमग्राम्यता, गम्भीरशब्दत्वं मेघस्येव, अनुनादिता प्रतिरवोपेतत्वं, दक्षिणत्वं सरलता, उपनीतरागत्वं उत्पादितश्रोतृजनस्वविषयबहुमानता, एते सप्त शब्दापेक्षा अतिशया अत ऊर्ध्वं त्वर्थाश्रयाः। तत्र महार्थत्वं परिपुष्टार्थाभिधायिता, अव्याहतपौर्वापर्यत्वं पूर्वापरवाक्याविरोधः, शिष्टत्वं वक्तुः शिष्टत्वसूचनात्, असन्दिग्धत्वं परिस्फुटार्थप्रतिपादनात्, अपहृतान्योत्तरत्वं परदूषणाविषयता, हृदयग्राहित्वं दुर्गमस्याप्यर्थस्य परहृदयप्रवेशकरत्वं, देशकालाव्यतीतत्वं प्रस्तावौचितता, तत्त्वानुरूपत्वं विवक्षितवस्तुस्वरूपानुसारिता, अप्रकीर्णप्रसृतत्वं सम्बन्धाधिकारपरिमितता, अन्योन्यप्रगृहीतत्वं पदानां वाक्यानां वा परस्परं सापेक्षता, अभिजातत्वं यथाविवक्षिताभिधानशीलता, अतिस्निग्धमधुरत्वं बुभुक्षितस्य घृतगुडादिवत्परमसुखकारिता, अपरमर्मवे-

धित्व परममानुद्घट्टनशीलता, अर्थधर्माभ्यासानपेतत्व अथधर्मप्रतिबद्धता, उदारत्वमतिशिष्टगु फगुणयुक्तता अन्यस्यार्थप्रतिपादकता वा, परनिन्दात्मोत्कर्षविप्रमुक्तत्व प्रतीत, उपगत-श्लाघत्व उक्तगुणयोगत प्राप्तश्लाघता,अनपनीतत्व कारकाकालवचनलिङ्गादिव्यत्ययरूपवचनदोषा पेतता, उत्पादितोविच्छिन्नकौतूहलत्व श्रोतृणा स्वविषयेउत्पादित जनितमविच्छिन्न कौतूहल कौतुक येन तत्तया तद्भावस्तत्व श्रोतृपुंस्वविषयाद्भुतविस्मयकारितेतिभाव, अद्भुतत्वमनति विलम्बितत्वञ्च प्रतीत, विभ्रमविक्षेपकिलिकिञ्चितादिविमुक्तत्वमिति विभ्रमोवक्तृभ्रान्तिमनस्कता विक्षेपोवक्तुरेवाभिधेयार्थं प्रत्यनासक्तता किलिकिञ्चित रोषभयाभिलाषादिभावाना युगपदसकृत् करणम, आदिशब्दात्तदीयान्तरपरिग्रह तैर्विमुक्त यत्तत्तया तद्भावस्तत्वम्, अनेकजाति समयाश्रविचित्रत्व सर्वभाषानुव्यापित चित्ररूपता। आहितविशेषत्व शेषपुरुषवचनापेक्षया शिष्येषूत्पादितमतिविशेषता, साकारत्व विच्छिन्नपदवाक्यता, सत्वपरिगृहीतत्वमोजस्विता, अपरि-खेदित्व मनायाससम्भवता अव्यवच्छेदित्व विवक्षिताथ सम्यक् सिद्धियावदविच्छिन्नवचन प्रमेयतेति। "आगासफालियामएणन्ति" आकाशस्फटिक यदाकाशवत् अतिस्वच्छस्फटिक तन्मयेन। "धम्मज्झएणन्ति" धर्मचक्रवर्त्तित्वसूचकेन केतुना महेन्द्रध्वजेनेत्यर्थ । तथा "पुव्वाणु पुव्विञ्च रमाणे" इति पूर्वानुपूर्व्याक्रमेणेत्यर्थ । चरन् सञ्चरन् एतदेवाह,"गामाणुगाम दूइज्ज-माणे" इति ग्रामश्चानुग्रामश्च विवक्षितग्रामानन्तरग्रामो ग्रामानुग्राम त द्रवन् गच्छन् एकस्मात् अनन्तर ग्राममनुलङ्घयन् इत्यर्थ । अनेनाप्रतिबद्धविहारिताप्याख्यापिता तत्राप्यौत्सुक्याभाव-माह। 'सुहमुहेण विहरमाणे" सुख सुखेन शरीरखेदाभावेन सयमाबाधाभावेन च विहारेण वा ग्रामादिपु विहरन् अवितिष्ठमानो "जेणेवति"प्राकृतत्वा त्सप्तम्यर्थे तृतीया,यस्मिन्नेव देशे आमल कल्पानगरी, यस्मिन्नेव च प्रदेशे वनषण्डो, यस्मिन्नेव देशेऽशोकतरोरधस्ताद्रूप शिलापट्टक, "तेणामेवेति" तस्मिन्नेव देशेउपागच्छति। उपागत्य च यथा प्रतिरूप यथोचित मुनिजनस्याव ग्रहमावास अनुज्ञापनापूर्वकमवगृह्णाति अवगृह्यचाशोकवरपादपस्याध पृथिवीशिलापट्टके पूर्वा-भिमुख तीर्थकृतो हि भगवन्त सदा समवसरणे पृथिवी शिलापट्टके वा देशनार्थे पूर्वाभिमुखा वतिष्ठते, सपर्यङ्कनिषण्ण सयमेन तपसा चात्मान भावयन् विहरति आस्ते, तत "परिस नि-ग्गया" यावत् सा चैव, "तएणं आमलकप्पाए नयरीए सिंघाडगतिय च उक्कचच्चरचउम्मुह महापहपहेसु महुजणो अन्नमन्नस्सएवमाइक्खइ। एव भासेइ एव पण्णवेइ एव परूवेइ एव खलु देवाणुप्पिया समणे भगवम्महावीरे जाव आगासगएण चक्केण जावसञ्जमेण तवसा अप्पाण भावे माणे विहरइ। त महाफल खलु देवाणुप्पियाण तहारूवाण अरहन्ताण नाम-गोयस्सवि सवणयाए किमङ्गपुण अभिगमण वन्दण नमं सणपडिपुच्छणपज्जुवासणयाए त सय खलु एगस्सवि आयरियस्स धम्मियस्स सुवयणस्स सवणयाए किमङ्गपुणविउलस्स अट्ठस्स गहण याए त गच्छामोण देवाणुप्पिया समण भगवम्महावीर वन्दामो णमसामोसक्कारेमोसम्माणेमोक

सूरियाभेदेवे, सोहम्मेकप्पे सूरियाभविमाणे सभाए सुहम्माए सूरियभंसि¹ सीहासणंसि, चउहिं सामाणिय साहस्सीहिं² चउहिं अग्गमहिसीहिं³ सपरिवाराहिं तेहिं पुरिसाहिं⁴

स्थाण मध्याल देवयञ्चेइयम्। यज्जुवासेमी इय त इह भाव परभावय हियाए सुहाए आणुगामियत्ताए भविस्सइ तएणं आमलकप्पाएनयरीए" बहवे उग्गभोगादत्वादौपपातिक-ग्रन्थोक्त सर्व्वमवसातव्य यावत्समस्तापिराजप्रभृतिका परिषत् पर्युपासीना अवतिष्ठते॥ छ॥ "तेण कालेण" मित्यादिते इति प्राकृतशैलीवशात्तस्मिन्निति द्रष्टव्यम। यस्मिन् काले भगवान् वर्द्धमानस्वामीसाचाद्विहरति तस्मिन्काले "तेण समएणन्ति" तस्मिन् समये यस्मिन्नवसरे भगवानाम्-शालवने चैत्ये देशना कृत्वोपरतस्तस्मिन्नवसरे इति भाव। सूयाभोनाम्नादेवो नामशब्दोत्र व्ययरूपोप्यस्ति ततो विभक्तिलोप। ततो सोधर्मसोधम्माख्येकल्पे यत् सूर्याभ सूयाभनामक विमान तस्मिन् या सभा तत्र यत् सूयाभाभिधान सिंहासन तत्रोपविष्ट सन्निनिगम्यते। (चउ हिंसामाणियसाहस्सीहिं) इति समानेद्युति विभवादौभवा सामानिका अध्यात्मादित्वादिकगु-मानाधिपति सूयाभव देवसहसद्युतिविभवादिका देवाइत्यर्थ। ते च मातृपितृगुरूपाध्याय महत्तरवत। सूयाभदेवस्य पूजनीया केवल विमानाधिपतित्वहीना इति सूयाभ देव स्वामिन प्रतिपन्ना, तेषा सहस्राणि समानिकसहस्राणि तै श्चतुर्भि प्राकृतत्वाच्च सूत्रे सकारस्य दीर्घत्व स्त्रीत्वम। चतसृभिरगृमहिषीभि इह कृताभिषेकादेवी महिषीत्युच्यते, सा च स्वपरिवारभूताना सर्वासामपि देवीनामग्रत्यग्रा अग्रात्र्वता महिष्यश्च अगृमहिष्यस्ताभिश्चतसृभि। कथ भूता-भिरित्याह। सपरिवाराभि परिवारा सहयासान्ता सपरिवारास्ताभि परिवारश्चैकैकस्या देव्या। सहस्र देवीना तथा तिसृभि पर्षद्भि। तिस्रोहिविमानाधिपते सर्वस्यापि पर्षदस्तद्यथा अभ्य-न्तर मध्याबाह्या च, तत्र या वयस्य मण्डलीस्थानीया परममित्रसहतिसदृशी सा अभ्यन्तर पर्षत्, तया सहापर्यालोचित स्वल्पमपिप्रयोजन न विदधाति अभ्यन्तरपर्षदासहपर्यालोचित, मध्यमयाच सह दृढीकृत करणायैवनिरूप्यते यथेद क्रियतामिति साबाह्या। तथा (सत्तहिं अणि-एहिं) इति अनेकानि सैन्यानि तानिचसप्त तद्यथा हयानीक गजानीक रथानीक पदात्यनीक वृष भानीक गन्धर्व्वानीक नाटयानीक तत्राद्यानि पञ्चानीकानि सगूामायकल्पन्ते गन्धर्व्वनाटयानीकेतूप

सूयाभनामदेव सोधर्माकल्पनइविषइ एतलइपहिलइदेवलोकिसूयाभविमाननइविषइ सभासौधर्मानइविषइ सूयाभनामइ सिंहासननइविषइ च्यार सामानिक सहस्रनइसाथइ च्यार अगृमहिषीपट्टराणीसाथइ तेअगृमहिषीपरिवारसहितकरी त्रणिपरिषदा अभ्यतरपरिषदासहित

१। सूरियाभंसि, सूरियाभस। २। साहसीहिं, साहस्सीहिं। ३। अग्गमहिसीहिं, अग्गमहिसीहिं। ४। सपरिवाराहिं तेहिं पुरिसाहिं, सपरिवाराहिं परिसाहिं।

सत्तहि अणियाहिवईहिं१ सोलसहि आयरक्खदेव साहस्सीणं२ अन्नेहिय३ बहुहि सूरियाभ विमाण वासीणं४ वेमाणीएहिं५ देव देवीहिय६ सद्धि संपरिवुडे७ महयाहय८ नट्टगीयवाइय९ ततीतल

भोगाय ते' सप्तभिरनीकैः अनीकानिस्वस्वाधिपतिव्यतिरेकेण न सम्यक् प्रयोजने समापतिते सत्युप * कल्पन्ते तत सप्तानीकाधिपतयोपितस्य वेदितस्य वेदितव्याः। तथाचाह, (सत्तहि अणियाहिवइ-हि) षोडशभिरात्मरक्षदेवसहस्रेरिति विमानाधिपते सूर्याभस्य देवस्यात्मान रक्षयन्तीत्यात्मरक्षा, कर्मण्यणित्यण् प्रत्यय। तेच शिरस्त्राणकल्पा यथाहि शिरस्त्राण शिरस्याविद्धप्राणरक्षक भवति तथातेप्यात्मरक्षका गृहीतधनुर्दण्डादिप्रहरणा' समन्तत सप्तानीकाधिपतेरग्रतश्चावस्था-यिनोविमानाधिपते' सूर्याभस्यदेवस्य प्राणरक्षका'। देवानामपायाभावात् तेषा तथाग्रहणपुरस्सरम-वस्थान निरर्थकमिति, "चेसयण" स्थितिमात्रपरिपालनहेतुत्वात् प्रीतिप्रकर्षहेतुत्वाच्च, तथाहि ते समन्तत' सर्वासुदिक्षुगृहीतप्रहरणा ऊर्द्ध्वस्थिता' प्रवर्तिष्टमाना' स्वनायकशरीररक्षणपरायणा', स्वना-यकैकनिपण्णदृष्टय' परेपामसहमानानां क्षोभमुत्पादयन्तो जनयन्ति, स्वनायकस्य परांप्रीतिमिति एतेच नियतसंख्याका', सूर्याभस्य देवस्यपरिवारभूता देवा उक्ता ये तु तस्मिन् सूर्याभेविमानेपौरजान-पदस्थानीया येत्वाभियोग्यादासकल्पा स्तेऽतिभूयास आस्थानमण्डल्यामपि चानियतसंख्याका इति तेषा सामान्यत उपादानमात्र। (अन्नेहि बहुहियसूरियाभविमाणवासीहि देवीहि देवीहिय सद्धि संपरिवुडे) एते सामानिकप्रभृतिभि' सार्द्ध संपरिवृतसम्यक् नायकैकचित्ताराधनपरतया परि वृत'। (महयाहये) त्यादि, महतारवेणेतियोग', अहय इति आख्यानकप्रतिबद्धानीतिवृद्धा', अथवा अहतानि अव्याहतानि अक्षतानि इति भाव। नाट्यगीतवादितानिच तन्त्री वीणा तलाहस्ततालाः ताल' कंसिका' त्रुटितानि शेषतूर्याणि तथाघनोघनसदृशोध्वनि साधर्म्यात्, योमृदंगोमर्द्दल' पटुना

सातपरिषदासहित सातकटकनाधणीसाथइतेकेहागघर्व१ नाटिक२ हाथी३ घोडा४ रथ५ मंहितपदाति६ रषभ७ सोलहसह आत्मरक्षक देवतासहस्रसाथइ अनेरइयघइ घणइ सूर्याभ विमान वासीदे विमानसबंधीइ देवइ देवीइ साथइ परवडउउथकउ मोटइसब्दइ निरंतरनाटिक गीत वजाडउ वीणा हाथीडा कांसी वीजाघणावाजिन्त्र मेघसब्दसरीषा मादल डाहइपुरुषेइ वजाडीजेवाजित्र तेहनइसब्देकरीसहित प्रधान भोगविवायोग्यजेह भोगपंचेंद्रियनाविषयप्रतइभोगवतुथकु विचरइ

१। सत्तहि अणियाहि वइहि, सत्तहि अणियहि सत्तहि अणियाहिवईया। २। आयरक्खदेव साहस्सीण, आयरक्खदेवसाहस्सीहि। ३। अन्नेहिय, अन्नेहि। ४। वासीण, वासीहि। ५। वेमाणिएहि वेमाणीएहि। ६। देव देवीहिय, देवेहि देवीहिय, देवेहि देवीहिय। ७। सद्धि संपरिवुडे, सिद्धि संपरिवुडे, सद्धि संपरिवुडे। ८। महया हय, महता महय। ९। नट्टगीय वाईय, णट्टगीयवाइय।

